॥ श्रीः ॥



**काशी संस्कृत ग्रन्थमाला**

**२८६**



अज्ञातग्रन्थकारविरचिता

# ताम्बूलमञ्जरी

## हिन्दीभाषानुवादसहिता

अनुवादकः सम्पादकश्च

**श्री द्वारकाप्रसाद शास्त्री**

पूर्वसंग्रहाध्यक्षः

प्रयागस्थहिन्दीसाहित्यसम्मेलनवर्ति

हिन्दीसंग्रहालयस्य

**चौखम्भा संस्कृत संस्थान**

भारतीय सांस्कृतिक साहित्य के प्रकाशक तथा वितरक

पोस्ट बाक्स नं० ११३९

जड़ाव भवन, के. ३७/११६, गोपाल मन्दिर लेन

वाराणसी-२२१००१ ( भारत )

प्रकाशक : चौखम्भा संस्कृत संस्थान, वाराणसी

मुद्रक : श्रीगोकुल मुद्रणालय, वाराणसी

संस्करणम् : प्रथमम् वि० संवत् २०५०

मूल्य : रु० २३-५०

उत्तर प्रदेशसंस्कृतअकादम्याः वित्तीयसहायतया प्रकाशितोऽयंग्रन्थः

प्रथमावृत्ति १९९३

७५० प्रतिरूपाणि

फोन : ३३३४४५

अन्य प्राप्तिस्थान

चौखम्भा संस्कृत भवन

पोस्ट बाक्स नं० ११६०

चौक ( चित्रा सिनेमा के सामने )

वाराणसी—२२१००१ ( भारत )

फोन : ३२०४१४

THE
KASHI SANSKRIT SERIES
286
*****

# TĀMBŪLMAÑJARI

OF

ANONYMOUS AUTHOR

*Edited and translated into Hindi*

by

SHRI DWARKA PRASAD SHASTRI
*Ex Sangrahadhykśa*
*Hindi Sangrahālaya*
*Hindi Sahitya Sammelan*
*Allahabad*

CHAUKHAMBHA SANSKRIT SANSTHAN
*Publishers and Distributors of Oriental Cultural Literature*
**Post Box No. 1139**
K. 37/116, Gopal Mandir Lane
VARANASI–221001 ( INDIA )

Phone : 333445

First Edition : 1993

*Also can be had of*

**CHAUKHAMBHA VISVABHARATI**

Post Box No. 1084

Chowk, VARANASI–221001

Phone : 320414

*Printers :*

**SRIGOKUL MUDRANALAYA**

Gopal Mandir Lane

Varanasi–221001

# प्रस्तावना

## ताम्बूलम्

**परिचयः**

ताम्बूलं शुभस्य, समृद्धेः सम्मानस्य च सूचकमस्ति। इदमस्माकं भारतीयानाम् सामाजिकेषु, धार्मिकेषु, सर्वेष्वपि समायोजनेषु संपृक्तमस्ति। सांस्कृतिकदृष्ट्या ताम्बूलस्य महत्त्वपूर्णं स्थानं वर्तते। भारतेऽस्मिन् अस्य चर्वणस्य प्रथाऽतिप्राचीना। ताम्बूलशब्दस्य वाचकाः शब्दाः अनेकासु भारतीयाभाषासु वर्तन्ते। यथा तमिल-भाषायां 'वेत्तिलाई' तेलगुभाषायां 'तमालपाङ्' 'नागवल्ली' मलया-लमभाषायां 'वित्तिल्ला' 'वेतल्ला' तथा कन्नडभाषायां 'विलेदेले' इति। वर्मी-सिंहली-अरबीप्रभृतिभाषास्वपि ताम्बूलवाचकाः शब्दाः दृश्यन्ते। भारताद्बहिरपि दक्षिणचीन-स्याम-इण्डोचीनादिदेशेष्वपि ताम्बूलसेवनस्य प्रचारः वर्तते। अनेन ताम्बूलस्य प्राचीनता व्याप-कता च सिद्ध्यति। ताम्बूलसेवनस्य प्रथा विश्वस्य बह्वीषु प्रथासु अन्यतमा असाधारणी अनुपमा च वरीवर्ति। भारते आयुर्वेद-धर्म-शास्त्र-ज्यौतिष-तन्त्र-पुराण-कामशास्त्रादिविषयकेषु ग्रन्थेषु ताम्बूल-सेवनस्य विधि-निषेधवर्णनं सविस्तरं समुपलभ्यते। मङ्गलकार्येषु, उत्सवेषु, देवपूजनेषु, विवाहादिकृत्येषु च ताम्बूलवीटिकानां विधानं दृश्यते। समागतानां सम्बन्धिनां मित्राणाञ्च स्वागतं ताम्बूलैः क्रियते जनैः। ताम्बूलस्य प्रयोगः मुखशुद्ध्यर्थं ओषधिरूपेण च भवति। ताम्बूलमिदं स्वर्गेऽपि दुर्लभतममस्ति।

उक्तञ्च—

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिनिर्णाशनम्।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे! त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः॥

अन्यच्च—

इक्षोर्विकारा मतयः कवीनां गवां पयो बालकभाषणानि ।
ताम्बूलपानं युवतीकटाक्षा एते पदार्थाः न भवन्ति नाके ॥
ताम्बूलपत्राणि हरन्ति वातं पौगं फलं हन्ति कफं च हृद्यम् ।
चूर्णं विहन्यात् कफवातमुच्चैः हन्याच्च पित्तं खदिरस्य सारः ॥

उपयोगः—

ताम्बूलशब्दः तमु कांक्षायामित्यस्माद्धातोः औणादिके ऊल प्रत्यये बुगागमे दीर्घे कृते च सिध्यति । अतः यत् सर्वे आकांक्षन्ति तत् ताम्बूलमिति । इमम् शब्दं केचिद् भाषाविदः आर्येतरमूलकं मन्यन्ते । अस्य ताम्बूलस्य लता ताम्बूली, नागवल्ली प्रभृतिभिः संज्ञाभिः आहूयते । ताम्बूलपर्णं ताम्बूलदलं वा तस्याः नागवल्याः पर्णमस्ति । खदिरस्य सारं, चूर्णं, पूगफलं तथा चैलालवङ्गादिकं मेलयित्वा जनाः ताम्बूलवीटिकां निर्माय सेवनं कुर्वन्ति । शीतकाले च ताम्बूलसेवनस्याधिकं महत्त्वमस्ति ।

उक्तञ्च—

अतितरबलवति शीते पुम्भिः सेव्यः तकारसमुदायः ।
ताम्बूलंतरुणवधूस्तूलं तैलं तनूनपात् तरणिः ॥
अधुना ताम्बूले तमालपत्रादीनां बहुद्रव्याणामुपयोगो दृश्यते ।

कृषिः—

नागवल्लीपत्राणि लघूनि दीर्घाणि च भवन्ति । पर्णस्य मध्ये एका शिरा भवति । उपरि वृन्तं भवति यस्य चर्वणं वर्जितमस्ति । भारतस्यानेकेषु भागेषु ताम्बूलपर्णस्य अनेकाः जातयः लभ्यन्ते । दक्षिणभारते श्रीवाट्–आम्वाट्–सप्तसी–गुहागर–मालवा–पटकुली (आन्ध्रे) होसणी प्रभृतिषु स्थानेषूत्पन्नानि ताम्बूलपत्राणि प्रसिद्धानि सन्ति । इत्थं ज्ञातिदेशभूमिप्रभावैः ताम्बूलपर्णानामनेकानि नामानि गुणाः प्रकाराश्च भवन्ति । यथा अधुना जगन्नाथी, बँगला, साची, मगही, सौफिया, कपूरी, ककेर, वशकाही, महोबियादि नामानि प्रसिद्धानि सन्ति । एतेषु मगधताम्बूलपर्णं प्राचीनकालादेव

प्रसिद्धमस्ति । भाषायां 'मगहीपान' इति कथ्यते । नागवल्याः कृषिः भारते तु भवत्येव । एतदतिरिक्तं ब्रह्मदेशे श्रीलङ्कायामपि नागवल्याः कृषिः भवति । अस्याः कृष्यर्थं उष्णतायाः आवश्यकता वरीवर्ति तथा सहैवार्द्रतायाः अपि । यत्रास्याः कृषिः भवति तत्स्थानं बरल, बर, बरेंजा, तथा भीटा' इति जनभाषायां कथ्यते । अस्याः कृषकः बर, बरल, बरई 'इति कथ्यते' । सेचनम्, उर्वरकपूर्त्तिः, उष्णता, छाया, आर्द्रता च सततमपेक्ष्यते । एकद्विवर्षं यावत् सततसेवया लताभ्यः पर्णानि लभन्ते पालकाः । इत्थं नागवल्याः कृषिः कठिना श्रमसाध्या च भवति । नागवल्लीपत्राणि हरितानि भवन्ति । तानि त्रोटयित्वा सुसेवया पक्वानि श्वेतवर्णानि च क्रियन्ते । तानि पक्वपर्णानि च कथ्यन्ते । मागधीपत्राणि (मगहीपान) बहुभिः यत्नैः सज्जीक्रियन्ते । अवएव तानि पर्णानि सुस्वादूनि महार्घाणि च भवन्ति ।

**सामान्यशिष्टाचारः—**

ताम्बूलं सामान्यशिष्टाचारस्याङ्गमस्ति । विज्ञाः वृद्धाश्च वदन्ति यत् यद्येकस्मिन् स्थाने बालाः वृद्धाः युवानश्चोपस्थिताः सन्ति तदा मिष्ठान्नादिको भोज्यपदार्थो बालेभ्यः बालिकाभ्यश्च प्रथमं देयः । पश्चाच्चान्येभ्यः किन्तु ताम्बूलप्रदानं गुरुभ्यः वृद्धेभ्यश्च पूर्वं तदनु अन्येभ्यः उपाह्रियते एष शिष्टाचारः । यदि मित्राणि वयस्याश्चोपस्थिताः सन्ति तदा प्रथमं तेभ्यः दत्त्वा तान् पृष्ट्वा वा स्वयं ताम्बूलभक्षणं कुर्यादिति साधुव्यवहारः । ब्राह्मणः उपस्थितश्चेत्तर्हि प्रथमं तस्मै दत्त्वा पश्चाच्च स्वयं खादेत् ।



उक्तञ्च—

ताम्बूलं ब्राह्मणेन्द्राय यो दत्त्वा प्राक् च भक्षयेत् ।
सुरूपो भाग्यवान् दक्षः भवेज्जन्मनि जन्मनि ॥

येषां कृते ताम्बूलसेवनं वर्जितमस्ति यथा संन्यासी, ब्रह्मचारी विधवाइत्यादयः, सामान्ये शिष्टाचारेऽपि तान् ताम्बूलविषये न पृच्छेत् । यदि कश्चित् पृच्छति तदा ते व्यङ्ग्यमितिमत्वा रुष्टाः

भवितुमर्हन्ति । स्वयं ताम्बूलभक्षणात्पूर्वमुपस्थितानां गुरुजनानामनुमतिरपि ग्राह्या ।

### भारते ताम्बूलम्

भारते ताम्बूलसेवनस्य प्रथा कदा प्रादुरभूदिति प्रश्ने समुपस्थिते ताम्बूली नागवल्ली वा कुतः समायातेति प्रश्नोऽपि समक्षमायाति । शब्दशास्त्ररीत्या 'ताम्बूलशब्दस्य व्युत्पत्तिरप्यत्र साहाय्यं कर्त्तुमर्हति । 'नागवल्ली' शब्दे नागशब्देन नागः सर्पः नागः गजः इति द्वयमपि गृह्यते । एतयोर्बाहुल्यात् केचित् वदन्ति यत् भारतस्य 'मालाबार प्रदेश' एव नागवल्याउत्पत्तिभूमिः भवितुमर्हति । स्कन्दपुराणस्य नागरखण्डे नागवल्याउत्पत्तिविषये कथैका लिखिता वर्तते । तस्यां कथायां नागवल्या उत्पत्तिरिन्द्रस्योद्यानेऽभूदिति वर्णितमस्ति । समुद्रमन्थनात्प्राप्तममृतं पीत्वा सुराः तं घटमिन्द्रस्योद्याने ऐरावतस्य आलानसमीपे स्थापितवन्तः । तदा मदस्राविणः ऐरावतस्य मदस्य कतिपयविन्दूनां तस्मिन् घटेनिपतनादेका वल्ली समुत्पन्ना । सा च लतारूपेण आलानमाश्रित्य वर्धमाना पत्रयुता च सञ्जाता । तानि पत्राणि सुगन्धयुतानि बभूवुः । नागस्य मदेन तत्साहचर्येण वर्द्धनात् सा लता नागवल्लीति नाम्ना प्रसिद्धा बभूव । इन्द्रः सुगन्धयुतानि तानि पत्राणि खादितुमारेभे । सः स्वमित्रेभ्योऽपि तत्पत्रम् दातुमारभत परमानन्दश्चान्वभवत् । तदेव पत्रम् कालान्तरे ताम्बूलनाम्ना प्रसिद्धिं लेभे । मृत्युलोके तदानीं वाणीवत्सरको नाम कश्चिद्राजा पृथ्वीं शशास । सः इन्द्रस्य महान् भक्तः आसीत् । एकस्मिन् दिवसे इन्द्रः तस्मै अपि एकं नागवल्लीदलम् दत्तवान् । तत्पत्रं भक्षयित्वा राजाऽपि प्रसन्नः बभूव । नागवल्याः एकं खण्डञ्च सः ययाचे । इन्द्रेण खण्डमेकं दत्तम् । राजा वाणीवत्सरकः तत्खण्डं पृथिव्यामानीय आरोपितवान् । इत्थं शनैः शनैः तस्याः नागवल्याः प्रचार-प्रसारौ बभूवतुः । जना अपि इन्द्रलोकवासिनः इव तत्पत्रे पूगफलस्य खदिरसारस्य चूर्णस्य च संमिश्रणं कृत्वा भक्षितुमारब्धवन्तः । तत्भक्षणेन च ते कामुकाः सञ्जाताः । कामासक्तत्वात्ते सर्वाणि

धार्मिककृत्यानि विस्मृतवन्तः । यज्ञादिलोपत्वाद्देवाः यज्ञभागरहिताश्च सञ्जाताः । ते चतुराननं प्रति गत्वा व्यथां निवेदितवन्तः । ब्रह्माऽपि ताम्बूलपत्रस्य शिरोभागेऽधोभागे च दरिद्रायाः वासं घोषितवान् । अन्यांश्च प्रतिबन्धान् कृतवान् येन क्रमशः स्थितिः सामान्या बभूव । अनया कथया ताम्बूलस्य प्राचीनताऽपि सिध्यति ।

**ऐतिहासिकः पक्षः**

भारते नागवल्याः उपलब्धत्वात्तथा च ताम्बूलपत्रे वर्णितानां द्रव्याणां प्राचुर्यादत्र ताम्बूलभक्षणस्य प्रथा वैदिककालेऽपि विद्यमाना आसीदिति मन्ये । ऋग्वेदे खदिरसारस्य ( कत्था ) महती प्रशंसा कृताऽस्ति । अथर्ववेदे खदिरवृक्षमश्रित्य अश्वत्थवृक्षस्यारोपणक्रियाऽपि वर्णिता विद्यते 'मुश्चका सताम्बूलया रसाना' इति गोपथ ब्राह्मणेऽपि समुल्लेखोऽस्ति । 'श्रुतेरिवार्थः स्मृतिरन्वगच्छत्' स्मृतिग्रन्थेषु यज्ञादिविधौ-हवनादौ च ताम्बूलस्य प्रयोगः वैदिके वैदिकोत्तरे च साहित्ये समुपलभ्यते । अतः साधारणमिदं वक्तुं शक्यते यदियं ताम्बूलसेवनप्रथा वैदिककालादेवाविच्छिन्ना समायाति । अतः नागवल्ली नास्ति काचित् विदेशीया लता । अस्माकमाचार्याः स्वधार्मिकेषु कृत्येषु सामाजिकेषु व्यवहारेषु च कस्या अपि विदेशीयायाः लतायाः समादरं कृत्वा तस्यै मान्यतां दातुं कथं प्रभवेयुः ।

तान्त्रिकसमुदायेषु ताम्बूलमतीव प्रसिद्धमस्तिप्रियश्च । सर्वेषु तन्त्रसमुदायेषु ( शैवशाक्त-सौर-वैष्णवगाणपत्यादिषु ) तथा स्मृतिषु पुराणेष्वपि ताम्बूलस्यविधिनिषेधात्मकं वर्णनम् कृतमस्ति ।

उक्तञ्च—

लवङ्गकलिकोज्ज्वलं बहुलनागवल्लीदलं
सजातिफलकोमलं सघनसारपूगीफलम् ।
सुधामधुरमाकुलं रुचिररत्नपात्रस्थितं
गृहाणमुखपङ्कजे स्फुरितमम्ब ताम्बूलकम् ॥[1]

---

१. दुर्गामानसपूजाश्लोकाङ्कः १४ ( दुर्गा सप्तशती, गीताप्रेस, गोरखपुर द्वारा प्रकाशिता पृष्ठः २२१ ।

प्राद्यार्घ्याचमनीयं च स्नानवसनभूषणैः ।
गन्धपुष्पधूपदीपनैवेद्याचमनं तथा ॥
ताम्बूलार्चनतोयं च तर्पणं च नमस्क्रियाम् ।
प्रयोजयेत् तत्र पूजामुपचारांस्तु षोडश ॥[1]

ब्रह्मचारी यतिश्चैव विधवा च रजस्वला ।
प्रत्येकं मांसतुल्यं तन्मिलितं सुरया समम् ॥
विद्याकामो दिवारात्रौ ताम्बूलं न तु खादयेत् ॥[2]

चरकसुश्रुतादिग्रन्थेषु ताम्बूलवर्णनं वर्तते । एतेषां ग्रन्थानां रचनाकालः ईसायाः प्रथमशतीतः पश्चान्न मन्यन्ते विद्वांसः । ताम्बूल शब्दस्य व्युत्पत्तिं विचार्य एतत्प्रतीयते यत् महावैयाकरणस्य पाणिनेः काले 'ताम्बूल' शब्दः प्रचलितः आसील्लोके । पाणिनेः कालः ई० पू० ७०० वर्षं यावन्निर्णीतोऽस्ति । श्रीयुधिष्ठिरमीमांसकस्तु पाणिनेः कालं वि० पू० २९०० वर्षं यावत् मन्यते । तदनुसारेणापि ताम्बूलशब्दस्य प्रचलनं लोके चतुः पञ्च सहस्रवर्षपूर्वकं सिध्यति । दुर्गा देवी पूजा विधाने दुर्गा सप्तशती नामके ग्रन्थे वैकृतिकरहस्ये 'सकर्पूरैश्च ताम्बूलैर्भक्तिभावसमन्वितैः' इत्यस्मिन् श्लोके ताम्बूलं षोडशोपचारपूजनस्याङ्गत्वेन स्वीकृतमस्ति ।

मीमांसाशास्त्रपारङ्गतेन विदुषा कुमारिलभट्टेन स्वकाले प्रचलितानामाचरणनामुल्लेखः कृतः । अन्ते च तदाचरणं तेन वर्जितमप्रामाणिकञ्च घोषितम् । तस्मिन् प्रसङ्गे तेनोक्तम् यत् दाक्षिणात्याः औदीच्याश्च ब्राह्मणाः अन्यैः वर्णैः स्पृष्टस्य ताम्बूलस्य चर्वणं कुर्वन्ति-किन्तु ते ताम्बूलभक्षणानन्तरं आचमनं न कुर्वन्ति । श्री पी० वी० काणे महोदयेन स्वकीये 'धर्मशास्त्र का इतिहास' ग्रन्थस्य द्वितीये भागे ९६१-९६२ पृष्ठे एतदुल्लिखितमस्ति । कुमारिल भट्टस्य समयः ६५०-७०० ई० स्वीकृतोऽस्ति ।

---

१. मन्त्रमहार्णव देवता खण्डे चतुर्थतरङ्गे १६-१७ श्लोकौ ।
२. ताम्बूलमञ्जरीः श्लोकाः ६५-६७ ।

महाकविकालिदासस्य रघुवंशमहाकाव्ये ताम्बूलशब्दस्य प्रयोगः लभ्यते। 'ताम्बूलीनाम् दलैस्तत्र रचिता पानभूमयः।' बाणभट्टस्य विषये 'हर्षचरितस्य तृतीये उच्छ्वासे एकं विशेषणं वर्तते' असकृदुपभुक्तताम्बूलविरलाधररागकान्तिः'। अग्रे तस्मिन्नेवोच्छ्वासे यदा बाणभट्टः स्वबन्धुवान्धवैः कृतेऽनुरोधे महाराजहर्षस्य चरितवर्णनाय सज्जीभूतस्तदाबाणभट्टस्य कृते 'गृहीतताम्बूलः' इत्यपि विशेषणपदं प्रयुक्तमस्ति। एभिर्विशेषणैः बाणभट्टस्य ताम्बूलसेवने विशिष्टा रुचिः दरीदृश्यते। 'कादम्बरी' नामके ग्रन्थे राजमाता विलासवती वन्दिभिः सह आनीतां कुलूतराजकन्यकां तरलिकां पुत्रीमिव पालनं पोषणञ्च कृत्वा संवर्धितां तां कञ्चुकिना सह राजकुमारस्य चन्द्रापीडस्य पार्श्वे प्रेषितवती। आदिष्टवती च राजकुमारं 'ताम्बूलकरङ्कवाहिनी रूपेण तरलिका गृह्यताम्। अनेन प्रसङ्गेन सिध्यति यत् तस्मिन् काले राजकुमारा अपि ताम्बूलसेविनः आसन्। बाणभट्टस्य कालं सप्तमशताब्द्याः पूर्वार्द्धं ( ६०६-६४८ ई० ) मिति मन्यन्ते विद्वांसः।

महाकविना श्रीहर्षेण स्वकीये नैषधीयचरिते महाकाव्ये कान्यकुब्ज ( कन्नौज ) नरेशस्य राजसभायां स्वस्मिन् विषये प्रोक्तम्—

'ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्' ( २२ सर्गे श्लोकः १५३ ) विद्वांसः जयचन्द्रस्य राज्यकालं ११६३-११७७ ई० पर्यन्तं स्वीकुर्वन्ति। अतः सिध्यति यत् द्वादशशताब्द्यां ताम्बूलसेवनं राजकुलेषु, राजसभायां विद्वन्मण्डलीषु च महत्त्वपूर्णं सम्मानजनकञ्च स्थानमलभत।

भारते वीरतापूर्वकं शत्रुणा सह युद्धं कृत्वा तस्य पराजयस्यार्थे अन्यस्मिन् च सङ्कटे समुत्पन्ने राजसभायां ताम्बूलवीटिका प्रायः प्रचलिता आसीत्। राज्ञो घोषणानन्तरं स एव योद्धा तां ताम्बूलवीटिकां गृह्णाति यः तस्याः समस्यायाः समाधानं युद्धेन कर्त्तुं शक्नोतिस्म। राज्ञः परमार्दिदेवं ( परमार ) स्य राजसभायां प्रायः ऊदलसिंहः ताम्बूलवीटिकां गृहीत्वा प्रतिज्ञां अचीकरत्।

इत्थं वैदिकसाहित्येषु, पुराणेषु, संस्कृतसाहित्यग्रन्थेषु, स्तोत्रेषु तन्त्रग्रन्थेषु च ताम्बूलवर्णनस्य बाहुल्यमस्ति। शाक्तग्रन्थेषु ताम्बूलं सिद्धिप्राप्तेः साधनरूपेण वर्णितमस्ति। हिन्दीभाषायां लिखितेषु रीतिकालीनेषु ग्रन्थेषु ताम्बूलस्य चर्चा विशेषतया कविभिः कृता वर्तते। पञ्चशत्युत्तरकालेऽनेकेषु लेखेष्वपि ताम्बूलस्य वर्णनमस्ति। सूक्तिग्रन्थेष्वपि ताम्बूलस्य वर्णनं दरीदृश्यते।

यथा--

ताम्बूलं मुखरोगनाशिनिपुणं संवर्धनं तेजसो
नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहं।
वक्त्रालंकरणं प्रहर्षजननं विद्वन्नृपाग्रे रणे
कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम्॥[1]

अतः एतदभितः सिध्यति यत् नागवल्ली भारतीया लताऽस्ति ताम्बूलपत्रे संमिश्रणीयद्रव्याणि पूगफलं, खदिरसारं, चूर्णं, ऐलालवङ्गकस्तूरीकेसरादीनि भारतीयद्रव्याणि सन्ति। ताम्बूलसेवनं आयुर्वेददृष्ट्या सर्वथा लाभप्रदमस्त्यनेकेषाम् रोगाणां कृते। ताम्बूलस्य प्रचारः भारतवर्षादेव बहिरपि जातमिति।

---

१. सुभाषितरत्नभाण्डागारम्, पृ० ३६७, चतुर्थं संस्करणम्।

## ताम्बूलमञ्जरीग्रन्थस्य परिचयः

ताम्बूलस्यविषयेऽद्य संस्कृतभाषायां ग्रन्थो दुर्लभः। डा० पी० के० गोडे[1] महोदयेन स्वलिखिते लेखे नृसिंहभट्टविरचितस्य 'ताम्बूलकल्प संग्रहः' ग्रन्थस्योल्लेखः कृतः। यस्य रचनाकालः १३५० ई० प्रतिपादितः। सोऽपि नास्ति मुद्रितः। द्वितीयश्च ग्रन्थः 'ताम्बूलमञ्जरी' नाम्ना दृष्टिपथमायातः। अयमपि हस्तलिखितोऽस्ति। अस्याः एका प्रतिः बड़ौदा ओरियन्टललाइब्रेरी नाम्नः पुस्तकालयस्य हस्तलिखित ग्रन्थानुभागे सुरक्षिताऽस्ति। ग्रन्थस्यास्य विवरणमधोलिखितमस्तिः—

ग्रन्थक्रमाङ्कः ११९५० वर्गाङ्कः आयुर्वेदे ८२।

ग्रन्थस्य आकारः ८·१ इन्च × ४·१ इन्च, फोलियो १४, प्रतिपृष्ठे १४ पङ्क्तयः, प्रतिपङ्क्त्यां ३० अक्षराणि, पद्यानां संख्या २२३, ग्रन्थस्य लिपिः देवनागरी, ग्रन्थः कर्गजस्योपरि लिखितोऽस्ति। ग्रन्थस्य अन्ते नास्ति काऽपि पुष्पिका। ग्रन्थस्य रचनाकालोल्लेखो नास्ति। अनुमानतः १६८१ ईस्वीतः प्राक् न सम्भाव्यते यतो हि ग्रन्थकारेण 'वैद्यामृतम्' ग्रन्थस्य एकः श्लोकः समुद्धृतः अस्मिन् ग्रन्थे। 'वैद्यामृतम्' ग्रन्थस्य रचनाकालः शक १६०३ निर्णीतोऽस्ति।

**विषयः**

ताम्बूलविषयमधिकृत्य लिखितोऽयं ग्रन्थः। ताम्बूलस्य तथा ताम्बूलीयादानभूतानाम् द्रव्याणाम् यथा पूगफलं, खदिरसारं, चूर्णं, त्वक्, सूक्ष्मैला, लवङ्गादीनामत्र विवेचनं कृतमस्ति। ग्रन्थेऽस्मिन् कतिपयलेखकानां ग्रन्थानाञ्च उद्धरणानि विद्यन्ते। लेखकेषु अच्युतः काशिराजः, वोपदेवः, भरद्वाजः, मिश्रः, वशिष्ठः, हेमाद्रिश्च प्रमुखाः सन्ति। ग्रन्थानां मध्ये अमरमाला, चूडामणिः, त्रिमल्लटीका, द्रव्यगुणनिघण्टुः, धन्वन्तरिः, योगमाला, योगरत्नम्, रत्नमालामञ्जरी,

---

१. पूना ओरियन्टलिस्ट खण्ड १८ पृ० १९–२१।

राजनिघण्टुः, रुचिवधूगलरत्नमाला, वैद्यरत्नम्, वैद्यामृतम्, स्कान्द-श्रावणमाहात्म्यञ्च सन्ति ।

ग्रन्थेऽस्मिन् २२३ श्लोकाः सन्ति । तेषाम् मध्ये ७८ संख्यकाः श्लोकाः ताम्बूलविषयकाः सन्ति । शेषाश्च १४५ श्लोकाः ताम्बूलस्य द्रव्यवर्णनपराः सन्ति । एतेषां द्रव्याणामुपादानानां वा अनुक्रमः अधोलिखितोऽस्ति ।

| | | |
|---|---|---|
| १ ताम्बूलम् | ८ सुवर्णदलम् | १५ लवङ्गम् |
| २ पूगम् | ९ रौप्यदलम् | १६ शुण्ठिः |
| ३ चूर्णम् | १० वातादः | १७ आर्द्रकम् |
| ४ तमाखुः | ११ कङ्कोलम् | १८ चन्दनम् |
| ५ खदिरसारः | १२ तृणकेसरम् | १९ नारिकेरफलम् |
| ६ कस्तूरिका | १३ जातिपत्री | २० त्वक् |
| ७ लताकस्तूरिका | १४ जातिफलम् | २१ कर्पूरः |

एतदतिरिक्तं अष्टसप्ततितमे (७८) श्लोके मुरमांसस्य नखस्य चोल्लेखोऽस्ति ।

लेखकः

अस्य ग्रन्थस्य लेखकस्य विषये सर्वमज्ञातमस्ति । लेखकः महाराष्ट्रीयोऽस्तीति प्रतीयते यतो हि ग्रन्थस्यास्य सप्तपञ्चाशत्त (५७) श्लोकस्थाने तेन एकम् मराठीभाषायाः पद्यं लिखितमस्ति । एतदतिरिक्तं तेन नासिकनिवासिनः अच्युतरायमोडकविरचितस्य 'सौभाग्यकल्पद्रुम'-नाम्नः ग्रन्थस्य एकः श्लोकः ताम्बूलमञ्जर्यां समुद्धृतः । यदा तेन 'ताम्बूल मञ्जरी' विरचिता तत्कालपर्यन्तम् श्रीमोडकस्य तस्य ग्रन्थानाञ्च प्रसिद्धिः महाराष्ट्राद्बहिर्नासीत् । अच्युतरायमोडकस्य कालः १७७८–१८३३ ई० निर्धारितोऽस्ति । अतः ताम्बूलमञ्जरीरपि १८१९ तः १८२३ ई० मध्यकाले विरचिता लेखकेनेति अनुमीयते । लेखकोऽपि श्रीमोडकस्य समकालीन एवेति प्रतीयते ।

ग्रन्थेऽस्मिन् संगृहीतानि पद्यानि केभ्यः ग्रन्थेऽभ्यः गृहीतानि, कियन्ति पद्यानि लेखकेन रचितानीति शोधस्यायं विषयः। ताम्बूलसेविनां कृते नास्त्येतदावश्यकं लाभप्रदं वा। तेषां कृते लाभप्रदा सामग्री सैव या अस्मिन् ग्रन्थे प्रतिपादिताऽस्ति।

ग्रन्थेऽस्मिन् ताम्बूलस्य गुणाः वर्णिताः सन्ति।

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिनिर्णाशनम्।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे! त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः॥

ताम्बूले सामान्यतया पूगफलं चूर्णं खदिरस्य सारश्च संमिश्रितं भवति। तस्य मात्राऽपि वर्णिता।

ताम्बूलसेवनेन मुखे कया युक्त्या लालिमा आयाति कथञ्च रागः न लभ्यते, इत्यपि कथितम्।

ताम्बूले पूगफलादीनाम् द्रव्याणाम् मध्ये मात्रापरिवर्तनं, ताम्बूलपत्रस्योपरि चूर्णलेपनविधि, ताम्बूलपत्रं विना पूगफलभक्षणस्यनिषेधः, वामहस्तेन ताम्बूलभक्षणस्य निषेधः, कस्य च हस्तेन न खादेदित्यस्य विवेचनं, आयुर्वेददृष्टयाकेषां रोगिणां कृते ताम्बूलं हानिकरमस्तीति विवेचनं धर्मशास्त्रदृष्टयाऽपि ताम्बूलसेवनस्य केषाञ्चित् कृते निषधः, कदा ताम्बूलभक्षणमुचितमित्यादयः वर्ण्यविषयाः समाहिताः सन्ति। ग्रन्थेस्मिन् ताम्बूलद्रव्याणां वर्णनम् कृतमस्ति।

ताम्बूलवल्लिकापत्रं कटुपाकरसोषणम्।
तीक्ष्णोष्णं तुवरं क्षारं दीपनं विशदं सरम्॥
रोचनं स्रंसनं स्वयं रक्तपित्तविवर्धनम्।
कफवातास्यदौर्गन्ध्यकण्डूक्लेदमलापहम्॥

पूगफलं

रोचनं मोहनं हृद्यं कफपित्तनिवर्हणम् ।
दीपनं वक्त्रवैरस्य मलदौर्गन्ध्यनाशनम् ॥

चूर्णम्

शैलोद्भवग्रावविशेषचूर्णं श्रीवासतोयं घनसारपूर्णम् ।
ताम्बूलरागोदयजागरूकं निरन्तरं पाचकजागरूकम् ॥

खदिरः

खदिरः शीतलोदन्त्यः कण्डूकासारुचिप्रणुत् ।
तिक्तः कषायो मेदघ्नः कृमिमोहज्वरव्रणान् ॥
श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत् ॥

कस्तूरी

कस्तूरी सुरभिस्तिक्ता चक्षुष्या मुखरोगजित् ।
किलासमुखदौर्गन्ध्यवातालक्ष्मीकफापहा ॥

लताकस्तूरिका

लताकस्तूरिका तिक्ता स्वाद्वी वृष्या हिमा लघु ।
चक्षुष्या छेदिनी श्लेष्मा तृष्णावस्त्यातिरोगजित् ॥

वातादः

वातादमज्जा मधुरो वृष्यः पित्तमलापहाः ।
स्निग्धोष्णः कफकृच्छ्रेष्ठः रक्तपित्ताविकारिणाम् ॥

कङ्कोलम्

कङ्कोलं लघु तिक्तोष्णं तीक्ष्णं हृद्यं रुचिप्रदम् ।
कफानिलास्यदौर्गन्ध्यहृद्रोगकृमिमान्द्यजित् ॥

तृणकेसरम्

कुङ्कुमं कटुकं तिक्तं वर्ण्यं व्रणविशोधनम् ।
हन्ति दोषत्रयं हिध्माशिरोरोगवमिकृमीन् ॥

जातिपत्री

जातिपत्री कटुस्तिक्ता सुरभिः कृमिहारिणी ।
वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी ॥

जातीफलम्

जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु ।
कटुकं दीपनं हृद्यं स्वर्यं श्लेष्मानिलापहम् ॥

लवङ्गम्

लवङ्गं शीतलं तिक्तं चक्षुष्यं भुक्तरोचनम् ।
वातपित्तकफघ्नं च तीक्ष्णं मूर्धरुजापहम् ॥

शुण्ठचार्द्रकम्

अग्निसंदीपनं रुच्यं जिह्वाकण्ठविशोधनम् ।

ताम्बूलधूपनम्

धूपेनापोह्य हृद्यैर्वा कटुतिक्तकषायकैः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥

ताम्बूलवीटिका

एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः ।
जातीफलदलैः पूगैर्लाङ्गल्यूषणनागरैः ।
चूर्णैः खदिरसारैश्च युक्ता कर्पूरवीटिका ॥

अन्यच्च

ताम्बूलेन विना जिह्वा जडीभूता सरस्वती ।
बहिर्नायाति सहसा नग्ना कुलवधूरिव ॥
सुपूगं च सुपर्णं च चूर्णखादिरसंयुतम् ।
अदत्त्वा द्विजदेवेभ्यो ताम्बूलं वर्जयेत् सुधीः ॥

मुखदाहे

मुखे दह्यते चूर्णकेन प्रमादात
यदा नागवल्लीदलस्थेन पुंसः ।
सितातैलसौवीरकैस्तन्निवृत्तिः
पृथक् तस्य गण्डूष एवोपदिष्टः ॥

निषेधः

ब्रह्मचारी यतिश्चैव विधवा च रजस्वला ।
प्रत्येकं मांसतुल्यं तन्मिलितं सुरयासमम् ॥
विद्याकामो दिवा रात्रौ ताम्बूलं न तु खादयेत् ॥
ताम्बूलं न सेवेत् सुविरक्तो क्षुधातुरः ।
प्रमेही मूत्रकृच्छ्री च क्षीरमभ्यवहृत्य च ॥
ग्रहणीवानतीसारे ताम्बूलं परिवर्जयेत् ।
ताम्बूलं व्रतियतिदीक्षिताः व्रतस्थाः
सा जह्यात् पतिरहिता च कामिनी या ॥

अतिसेवनं हानिकरम्

दन्तदौर्बल्यपाण्डुत्वनेत्ररोगबलक्षयान् ।
वितनोत्यास्यरोगांश्च ताम्बूलमतिसेवितम् ॥

---

# विषयसूची





## ताम्बूलोपादानानां वर्णनम्

परिशिष्टम्

# ताम्बूलमञ्जरी

## अथताम्बूलप्रकरणम्

ताम्बूलपत्राणि हरन्ति वातं
पौगं फलं हन्ति कफं च हृद्यम् ।
चूर्णं निहन्यात् कफवातमुच्चै-
र्हन्याच्च पित्तं खदिरस्य सारः ॥ १ ॥

ताम्बूलपत्र ( पान का पत्ता ) वायु को हर लेता है। मनोहर सुपारी कफ को मारती है। चूना कफ और वात दोनों को नष्ट करता है। खदिरसार ( कत्था ) पित्त को नष्ट करता है ॥ १ ॥

इत्थं हि ताम्बूलमुदाहरन्ति
दोषत्रयस्यापि निवारणाय ।
अतो हि सर्वे सुखिनो मनुष्या
अहर्निशं प्रीतिकरं भजन्ते ॥ २ ॥

इस प्रकार ताम्बूल को त्रिदोष ( वात, कफ और पित्त ) नाशक कहते हैं। इसीलिए सब सुखी लोग प्रसन्नताकारक ताम्बूल का सेवन रातदिन ( सदैव ) करते हैं ॥ २ ॥

धन्वन्तरौ—

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं कृमिहरं दुर्गन्धिनिर्णाशनम् ।
वक्त्रस्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं
ताम्बूलस्य सखे ! त्रयोदशगुणाः स्वर्गेऽपि ते दुर्लभाः ॥३॥

धन्वन्तरि ग्रन्थ में कहा गया है कि हे मित्र ! ताम्बूल कटु, तिक्त, उष्ण, मधुर, क्षार और कषाय होता है। यह वात, कफ और पित्त-नाशक, कृमिमारक और मुख की दुर्गन्ध को नष्ट करता है। यह मुख का भूषण है। मुख शुद्धिकारक और कामवासना का उद्दीपक है। ताम्बूल में ये तेरह गुण हैं। वे स्वर्ग में भी दुर्लभ हैं ॥ ३ ॥

अभ्यङ्गे निशि माङ्गल्ये प्रभाते भोजनान्तिके ।
ताम्बूलभक्षणं श्रेष्ठमित्याचार्या वदन्ति हि ॥ ४ ॥

आचार्य लोग कहते हैं कि तेल आदि मलने के बाद, रात्रि में, मङ्गल कार्य में, प्रातः काल और भोजन कर लेने पर ताम्बूल भक्षण श्रेष्ठ है ॥ ४ ॥

सार्धमासद्वये दद्यात् ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसम्मिश्रं ताम्बूलं योजयेद्भिषक् ॥ ५ ॥

ढाई मास हो जाने पर प्रथम बार शिशु को ताम्बूल देना चाहिये। वैद्य को चाहिये कि वह कपूर आदि मिलाकर शिशु को ताम्बूल दे ॥ ५ ॥

मुहूर्त्तः—

मूलाश्विमैत्रकरतिष्यहरीन्द्रभेषु
पौष्णे तथा मृगशिरोऽदितिवासवेषु ।
अर्कैन्दुजीवभृगुबोधनवासरेषु
ताम्बूलनूतनदलाद्यशनं शिवाय ॥ ६ ॥

ज्योतिष के अनुसार—ताम्बूल दल प्रथम बार मूल, अश्विनी, अनुराधा, हस्त, पुष्य, श्रवण, ज्येष्ठा, रेवती, मृगशिरा, पुनर्वसु और घनिष्ठा नक्षत्रों में, रवि, सोम गुरु, शुक्र और बुध इन दिनों में सेवन करना कल्याणकारी होता है ॥ ६ ॥

भरद्वाजः—

क्रमुकं पञ्चनिष्कं स्यात् ताम्बूल्याश्च पलद्वयम् ।
गुञ्जाद्वयं चूर्णमानं ताम्बूलक्रममुत्तमम् ॥ ७ ॥

भरद्वाज के अनुसार सुपारी पाँच निष्क, दो पल वजनभर ताम्बूल पत्र और दो गुना बराबर चूना यह ताम्बूल का उत्तम अनुपात है ॥ ७ ॥

त्रिमल्लटीकायाम्—

पूगार्धं सप्तपर्णानि चूर्णं गुञ्जोन्मितं तथा ।
माषमात्रं तु खदिरं ताम्बूलं तद्विदो विदुः ॥ ८ ॥

त्रिमल्ल टीका में कहा गया है कि पान के सात पत्ते, आधी सुपारी, गुञ्जा बराबर चूना, माष बराबर कत्था यह ताम्बूल का अनुपात है। ऐसा ताम्बूलसेवी लोग जानते हैं ॥ ८ ॥

राजनिघण्टौ—

द्विपत्रमेकपूगं च सचूर्णखदिरं च तत् ।
गायत्रीगुटिकाचूर्णं पूगं नागलतादलम् ।
नात्युच्चैर्नातिनीचैश्च पर्णानामधिकं वरम् ॥ ९ ॥

राजनिघण्टु में लिखा है कि मध्यम आकार के दो पत्ते पान, एक सुपारी, कत्था या गायत्री गुटिका कत्था, चूर्ण और पान का पत्ता यह अनुपात उचित है। यदि पान का पत्ता अधिक हो तो अच्छा रहता है ॥ ९ ॥

अर्धपूगं सखदिरं रक्तिदं योज्यचूर्णयुक् ।
यथोत्तरं यथा स्वादमधिकाङ्गेन योजितम् ॥ १० ॥

आधी सुपारी, ललाई देने योग्य कत्था, उचित मात्रा में चूना होना चाहिये। अधिक मात्रा बढ़ा देने से अधिक स्वाददायक हो जाता है ॥ १० ॥

समपत्रफले रागो विरागस्तु फलाधिके।
चूर्णाधिक्ये च दुर्गन्धः पत्राधिक्ये सुगन्धता ॥ ११ ॥

पान के पत्ते के अनुपात से सुपारी बराबर होने पर पान राग-युक्त ( लाल ) होता है। सुपारी मात्रा में अधिक हो जानें पर पान की ललाई कम हो जाती है। चूना अधिक होने से मुँह में दुर्गन्ध उत्पन्न होती है और पान का पत्ता अधिक होने पर सुगन्ध अधिक होती है ॥ ११ ॥

अन्यच्च—

पर्णाधिक्ये दीपनी रङ्गदात्री
पूगाधिक्ये रूक्षदा कृच्छदात्री।
चूर्णाधिक्ये सोष्णदुर्गन्धदात्री
साधिक्ये चेत् खदिरे शोषदात्री ॥ १२ ॥

और भी—

पान का पत्ता अधिक होने पर पान का बोड़ा जठराग्नि को दीप्त करता है और चटक ललाई देता है। सुपारी अधिक हो जाने पर पान का बीड़ा कृच्छ्ता और रूक्षता पैदा करता है। चूना अधिक हो जाने पर मुख में उष्णता और दुर्गंन्ध पैदा करता है। यदि कत्था मात्रा से अधिक हो जाय तो खुश्की पैदा करता है ॥ १२ ॥

युक्तेन चूर्णेन करोति रागं
रागक्षयं पूगफलातिरिक्तम्।
चूर्णाधिकं वक्त्रविगन्धिकारि
पत्राधिकं साधुकरोति गन्धम् ॥ १३ ॥

चूना मिला देनें से ललाई आती है। अधिक सुपारी होनें से लाली कम हो जाती या नष्ट हो जाती है। अधिक चूना मुख में दुर्गन्धकारी होता है। पान का पत्ता अधिक होने पर सुगन्ध पैदा करता है ।। १३ ।।

आमोदनं दीपनपाचनं च प्रमेहमूत्रामयनाशनं च।
प्रभाते पूगमधिकं मध्याह्ने खादिरं तथा।
निशायां च तथा चूर्णं ताम्बूलं भक्षयेत् सदा ।। १४ ।।

पान प्रसन्नतादायक, उद्दीपक तथा पाचन क्रिया में सहायक होता है। पान प्रमेह और मूत्रसम्बन्धी रोगों को दूर करता है। प्रातः काल के पान में सुपारी अधिक, दोपहर के पान में कत्था अधिक और रात के पान में थोड़ा चूना अधिक डालकर सदा पान का भक्षण करना चाहिये ।। १४ ।।

दिवा खदिरसारं तु ताम्बूलं तु सुशोभनम्।
रात्रौ खदिरसारं तु शक्रस्यापि श्रियं हरेत् ।। १५ ।।

दिन के पान में कत्था अधिक डालना अच्छा होता है किन्तु रात्रि के पान में अधिक कत्था इन्द्र की भी लक्ष्मी हर लेता है ।।१५।।

प्रातः पूगाधिक कुर्याच्चूर्णाधिक्यं तु मध्यमे।
रात्रौ पत्राधिकं कुर्यात् ताम्बूलस्येति लक्षणम् ।। १६ ।।

प्रातः काल के पान में सुपारी अधिक करना चाहिये। दोपहर के पान में चूना अधिक डालना चाहिये। रात के पान में पान के पत्ते अधिक करना चाहिए। पान के उत्तम बीड़े का यही लक्षण है ।। १६ ।।

निशि पर्णाधिकं भक्षेत् तस्य लक्ष्मीर्विवर्धते।
ताम्बूलमुच्यते चैतत् कामकृत् पाचनं सरम् ।। १७ ।।

रात्रि में अपेक्षाकृत पत्तायुक्त पान का बीड़ा खाने से पान खाने वाले व्यक्ति की लक्ष्मी बढ़ती है। ऐसा पान कामोत्तेजक, पाचक तथा सारक होता है ॥ १७ ॥

पर्णाधिक्यात् पित्तकरं पूगाधिक्यात् कफप्रदम् ।
शुक्रहृत् खदिराधिक्यात् तस्मात्तदुचितं वरम् ॥ १८ ॥

पान का अधिक पत्ता पित्तकारक, अधिक सुपारी कफकारक तथा अधिक कत्था वीर्यनाशक होता है। इसलिये इनका उचित अनुपात होना ही अच्छा है ॥ १८ ॥

अनिधाय मुखे पर्णं पूगं खादति यो नरः ।
सप्तजन्मदरिद्रत्वमन्ते न स्मरते हरिम् ॥ १९ ॥

मुख मे पान का पत्ता डाले बिना जो व्यक्ति केवल सुपारी खाता है, वह सात जन्म तक दरिद्रता भोगता है और अन्त में हरि का स्मरण भी नहीं कर पाता ॥ १९ ॥

आयुरग्रे यशोमूले लक्ष्मीर्मध्ये व्यवस्थिता ।
पर्णमूले भवेद् व्याधिः पर्णाग्रे चायुषः क्षयः ॥ २० ॥

पान के पत्ते के अग्रभाग में आयु, मूलभाग में यश, मध्य भाग में लक्ष्मी का वास रहता है। मूल में व्याधि और अग्र भाग में आयु का क्षय रहता है ॥ २० ॥

चूर्णपर्णं हरेल्लक्ष्मीं शिरा बुद्धिविनाशिनी ।
तस्मादग्रं च मूलं च शिरां चैव विशेषतः ॥ २१ ॥

पान की लता का चूर्णपर्ण लक्ष्मी हर लेता है। उसकी शिरा बुद्धि का विनाश करती है। इसलिए विशेष रूप से पान के पत्ते का अग्र, शिरा और मूल को न खाना चाहिए ॥ २१ ॥

चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेन्नरः ।
तर्जन्या चूर्णमादाय ताम्बूलं न तु खादयेत् ॥ २२ ॥
यदि खादयते मूढो रौरवं नरकं व्रजेत् ॥ २३ ॥

चूर्णपर्ण को छोड़कर ताम्बूल का सेवन करना चाहिये। तर्जनी उँगली से चूना लेकर पान न खाना चाहिए। यदि कोई मूर्ख ऐसा करता है तो वह रौरव नरक में जाता है ॥ २२-२३ ॥

पर्णाग्रे वसते लक्ष्मीः पर्णमूले सरस्वती ।
पर्णपृष्ठे वसेद् गौरी चूर्णपर्णेषु चन्द्रिका ॥ २४ ॥

पान के पत्ते के अग्रभाग में लक्ष्मी, पत्ते के मूल में सरस्वती, पृष्ठ भाग में गौरी और चूर्णपर्ण में चण्डिका का वास रहता है ॥ २४ ॥

ताम्बूल्यग्रे निवसति रमा मध्यमे वागधीशा
पृष्ठे ज्येष्ठा हिमगिरिसुता वामभागेऽन्यतोभूः ।
अन्तर्विष्णुर्बहिरुडुपतिः शङ्करश्चैव कोणे
मूले मृत्युर्वसति मदनः सर्वपत्रेषु पुंसाम् ॥२५॥

इति योगमालायाम्

ताम्बूली या नागबल्लो ( पान की लता ) के अग्रभाग में लक्ष्मी, मध्य भाग में सरस्वती, पृष्ठभाग में गौरी, वाम भाग में भूमि, भीतर विष्णु, बाहर चन्द्रमा, कोण में शङ्कर, मूल में मृत्यु और सम्पूर्ण पत्तों में कामदेव का वास रहता है ॥ २५ ॥
यह योगमाला में है ।

अङ्गुष्ठचूर्णसंयुक्तं पर्णपृष्ठे तु लेपनम् ।
तत्पर्णं खादयेत् तेन सोमपानं दिनेदिने ॥ २६ ॥

अँगूठे से चूना लेकर पान पर लेप करके उसको खाना चाहिये। उसको खाने से प्रतिदिन सोमपान का पुण्य मिलता है ॥ २६ ॥

पापम्—

कनिष्ठानामिकामध्यातर्जन्यङ्गुष्ठयोगतः ।
शोको हानिस्तथा मृत्युरैश्वर्यं चौर्यमेव च ॥ २७ ॥

कनिष्ठा ( कनगुरी ), अनामिका, मध्या ( बीच की उँगली ) तथा तर्जनी और अँगूठे के योग से ( मेल से ) पान खाने में शोक, हानि, मृत्यु, ऐश्वर्य और चोरी लगने का दोष होता है ॥ २७ ॥

अन्य:—

अङ्गुष्ठस्य तु लेपेन सर्वसिद्धिप्रदायकम् ।
जयस्त्रीवस्त्रलाभादि भविष्यति न संशयः ॥ २८ ॥

अँगूठे से चूने का लेप पान के पत्ते पर करके खाने से वह पान सर्वसिद्धिदायी होता है। जय, स्त्री, वस्त्र लाभ आदि निःसन्देह होगा ॥ २८ ॥

पूगं च शकलीकृत्य खदिराक्तं सुपर्णकम् ।
पिच्छिलं चूर्णसंयुक्तं ताम्बूलं भक्षयेत् सुधीः ॥ २९ ॥

बुद्धिमान् पुरुष को अच्छे पान के पत्ते पर गीला चूना लगाकर कत्था डालकर, सुपारी को काटकर उस पर रख कर तब उस पान को खाना चाहिये ॥ २९ ॥

निषेधः—

वामहस्तेन नो खादेत् स्त्री हस्तेन तथैव च ।
यदि खादयते मूढस्तस्य लक्ष्मीर्विनश्यति ॥ ३० ॥

बायें हाथ से पान न खाना चाहिये तथा स्त्री के हाथ से पान न खाना चाहिये। यदि कोई मूर्ख खाता है तो उसकी लक्ष्मी नष्ट हो जाती है ॥ ३० ॥

म्लेच्छहस्ताच्छत्रुहस्ताच्छङ्कितस्य नरस्य च ।
अथवैदग्धहस्तस्थस्ताम्बूलं नैव भक्षयेत् ॥ ३१ ॥

म्लेच्छ के हाथ से, शत्रु के हाथ से, जिससे किसी प्रकार की शङ्का हो उसके हाथ से तथा चालाक ( धूर्त्त ) व्यक्ति के हाथ से पान न खाना चाहिये ॥ ३१ ॥

ताम्बूलपत्रदानविवेकः

शतपत्राणि देवेशि चक्रवर्तिवराय च ।
गुरुभ्यः सम्प्रदातव्या द्वात्रिंशत्पर्णवीटिका ॥ ३२ ॥
अष्टाविंशतिर्भूपेभ्यो बान्धवेभ्यो दशाष्टकम् ।
जामात्रे पक्षपत्राणि वसु द्वादश वा प्रिये ॥ ३३ ॥
पञ्चविंशतिःशक्तिभ्यः पुत्रेभ्यस्तत्त्वसंख्यया ।
षट्पर्णानि च शत्रुभ्यस्तुरीयं दानमुत्तमम् ॥ ३४ ॥

पान देने में विचार

हे महादेवि ! चक्रवर्त्तियों में श्रेष्ठ राजा को पान के सौ पत्ते तथा गुरु को पान के बत्तीस पत्ते देना चाहिये। राजा को अठाईस, बान्धवों को अठारह, दामाद को पन्द्रह, आठ या बारह, शक्तियों को पच्चीस, पुत्रों को तत्त्व संख्यक अर्थात् तीन, शत्रुओं को छः या चार पान देना चाहिये ॥ ३२-३४ ॥

पर्णत्रयं शत्रुपक्षे दशपर्णारिवैश्ययोः ।
वीरेभ्यः षोडश शिवे दिव्यौघे वसुपीठयुक् ॥ ३५ ॥
तदर्धं चैव सिद्धौघे मानवौघे तदर्धकम् ।
भृत्येभ्यः सप्तपर्णानि कन्यायै पञ्चविंशतिः ॥ ३६ ॥
चन्द्रयुक्तं महेशानि पौत्रेभ्यो दश पञ्च च ।
स्नुषायै त्रिंशतिः शिवे दास्यै चैव चतुर्दश ॥ ३७ ॥

अन्येभ्यः परमेशानि विंशत् पर्णाणि दापयेत् ।

शत्रु पक्ष को तीन पत्ते, शत्रु और वैश्य को दस पत्ते, वीरों के लिये सोलह पत्ते, दिव्य समूह को अड़तालीस पत्ते, सिद्ध समूह और मानव समूह को इसका आधा, नौकरों को सात और कन्या के लिए पच्चीस, चन्द्रयुक्त महेशों को तथा पौत्रों को पन्द्रह, पुत्रवधू को तीस, दासी के लिए चौदह और अन्यों के लिए पान के बीस पत्र देना चाहिये ॥ ३५-३८½ ॥

अग्रदानं तु शत्रुभ्यो वक्रदानं सुमित्रके ॥ ३८ ॥
त्रिर्यग्दानं सेवकादौ यथायोगेन योजयेत् ।
इति संक्षेपतः प्रोक्तं सिद्धियोगं शृणु प्रिये ॥ ३९ ॥

इति पत्रदानम्

शत्रुओं को यह पान—पत्र सामने होकर, मित्र को कुछ झुककर, और सेवक आदि को कुछ तिरछे होकर देना चाहिये । हे प्रिये ! सुनो, यह सिद्धियोग मैंने तुमसे संक्षेप में कहा है ॥ ३८½-३९ ॥

यह पत्रदान समाप्त हुआ ।

प्रातः अञ्जनानन्तरं धावनादिक्रिया प्रशस्ता ! तदाह !
ततो धावनगण्डूषधूमताम्बूलभाग्भवेत् ।
रुचिवैशद्यसौगन्ध्यमिच्छन् वक्त्रेण धारयेत् ॥ ४० ॥
जातीलवङ्गकर्पूरकङ्कोलकटुकैः सह ।
ताम्बूलीनां किसलयं हृद्यं पूगफलान्वितम् ॥ ४१ ॥
कटुकैर्लताकस्तूरीफलैरिति हेमाद्रिः ।

प्रातः काल अञ्जनादि के बाद दातून आदि करना अच्छा होता है । उसको कहते हैं—

दातून कुल्ला करके धूमपान करना और ताम्बूल खाना चाहिये ।

अपनी रुचि को परिष्कृत करने तथा मुख को सुगन्धियुत करने की इच्छा रखते हुये मुख में पान का बोड़ा धारण करना चाहिये ॥४०॥

इस पान बीड़ा में पान का बढ़िया पत्ता, सुपारी, जायफल, लौंग कपूर, शीतलचीनी और लता कस्तूरी उचित मात्रा में होनी चाहिये ॥ ४१ ॥

हेमाद्रि ने उक्त श्लोक में आये कटुक का अर्थ लता कस्तूरी फल किया है।

धूमेनापोह्य हृद्यैर्वा कटुतिक्तकषायकैः ।
ताम्बूलपत्रसहितैः सुगन्धैर्वा विचक्षणः ॥ ४२ ॥
पूगैः कङ्कोलकर्पूरलवङ्गसुमनः फलैः ।
फलैः कटुकषायै र्वा मुखवैशद्यकारकैः ॥ ४३ ॥

पान के शौकीन निपुण व्यक्ति पहले कटु, तिक्त और कषाय पान के पत्तों को मनोहर सुगन्धित द्रव्यों के धुयें से धूपित कर लें। फिर पान के प्रत्येक पत्ते के ऊपर सुपारी, शीतल चीनी, कपूर, लौंग, जायफल आदि मुख को शुद्धिकारक द्रव्यों को डालकर उसका बीड़ा बनाकर खाना चाहिए ॥ ४२-४३ ॥

ताम्बूलेन विना जिह्वा जडीभूता सरस्वती ।
बहिर्न याति सहसा नग्ना कुलवधूरिव ॥ ४४ ॥

पान का बीढ़ा जीभ पर न रहे तो वह जीभ जड़ हो जाती है। अतः सरस्वती नग्न कुलवधू के समान सहसा बाहर नहीं जाती हैं। अर्थात् पान खाने पर वाणी की जड़ता दूर हो जाती है और वाणी में प्रखरता आ जाती है ॥ ४४ ॥

कर्पूरं जातिकङ्कोलं लवङ्गं कटुकाह्वयम् ।
सचूर्णपूगैर्विहितं तन्त्रं ताम्बूलजं शुभम् ॥ ४५ ॥

कपूर, जायफल, शीतलचीनी, लौंग, लता कस्तूरी, चूना और सुपारी—ये पान के उपादान हैं। इनसे युक्त पान शुभ होता है ॥४५॥

सुपूगं च सुपत्रं च चूर्णखादिरसंयुतम्।
अदत्त्वा द्विजदेवेभ्यो ताम्बूलं वर्जयेद्बुधः ॥ ४६ ॥

सुन्दर सुपारी, चूना और कत्था मिला हुआ बढ़िया पान के पत्तों के बीड़े बनाकर ब्राह्मण और देवताओं को अर्पण किए बिना बुद्धिमान व्यक्ति के लिए खाना वर्जित है ॥ ४६ ॥

नैवेद्यमर्पयेच्चैव ताम्बूलं मुखरोचकम्।
ताम्बूले योजयेद् द्रव्यं चिक्कणं क्रमुकं तथा ॥ ४७ ॥
खदिरश्चूर्णकं जातीत्वक् च जातीफलं तथा।
लवङ्गैलं नारिकेलबीजस्य शकलं लघु ॥ ४८ ॥
स्वर्णरौप्याणि पत्राणि कर्पूरः केसरं तथा।
जातानि मागधे देशे नागवल्लीदलानि च ॥ ४९ ॥

मगधदेश में उत्पन्न पान के पत्तों पर चिकनी सुपारी, कत्था, चूना, जावित्री का टुकड़ा और जायफल का अंश, लौंग, इलायची, नारियल की गिरी का छोटा टुकड़ा, स्वर्ण और रजत का दल (वर्क) कपूर और केसर को रखकर मुख के लिए रोचक पान का बीड़ा बनाकर उसको नैवेद्य के रूप में (देवता को) अर्पित करना चाहिए ॥ ४७-४९ ॥

स्कान्दे श्रावणमाहात्म्ये चूडामणौ—

ताम्बूलं स्वर्णवर्णं क्रमुकफलयुतं साग्रमग्र्यं गृहीत्वा
कर्पूरेणाण्डजाभ्यां कृतखदिरवटीसौरभेणातिपूर्णम्।
चूर्णं ग्रावाणजातं शशधरकिरणप्रोज्ज्वलं तेन साकम्
दत्त्वा विप्राय पूर्वं तदनु नरपतिर्भक्षयेदाप्तदत्तम् ॥५०॥

स्कन्दपुराण श्रावण माहात्म्य चूड़ामणि में कहा गया है कि सुनहरे रंग के पान के पत्ते जो कपूर और कस्तूरी से बनाई गई कत्थे की सुगन्धित वटी से युक्त हो, चन्द्रमा के समान उज्ज्वल पत्थर का चूना मिला हुआ हो ( और ऐसे पान के बीड़े ) राजा को आप्त जन से प्राप्त हों तो उनको लेकर इनमें से कुछ ब्राह्मण को देकर तब राजा को उस पान को खाना चाहिए ॥ ५० ॥

नराभिषेकाशनवान्तिकर्म प्रान्तेऽथ ताम्बूलमतिप्रशस्तम् ।
कर्पूरकङ्कोललवङ्गपूगजातीफलैर्नागलतादलाक्तैः ॥५१॥

कपूर, शीतलचीनी, लौंग, सुपारी, जायफल का टुकड़ा और पान का पत्ता से युक्त पान का बीड़ा स्नान, वमन, और भोजन के अन्त में खाना अच्छा होता है ॥ ५१ ॥

शुद्धाश्मचूर्णं खदिरस्य सारः
कस्तूरिकाचन्दनमिश्रचूर्णम् ।
ताम्बूलमेतत् प्रवदन्ति राज्ञां
सौभाग्यदं कान्तिसुखप्रदं च ॥ ५२ ॥

पत्थर का शुद्ध चूना, कत्था, कस्तूरी और चन्दन से मिला हुआ चूर्ण युक्त पान राजाओं को सौभाग्य, कान्ति और सुखदायक होता है ॥ ५२ ॥

चूड़ामणौ--

कर्पूरकङ्कोललवङ्गपूगजातीफलै र्नागरखण्डपर्णैः ।
शुद्धाश्मचूर्णं खदिरस्य सारं ताम्बूलमेतन्नवधा प्रसिद्धम् ॥५३॥

चूड़ामणि में—कपूर, शीतल चीनी, लौंग, सुपारी, जायफल, नागर खण्ड में उत्पन्न पान के पत्ते, शुद्ध पत्थर का चूना और कत्था ये नव प्रकार के द्रव्यों से मिलकर ताम्बूल ( पान का बीड़ा ) प्रसिद्ध है ॥ ५३ ॥

बोपदेवः—

ताम्बूलपूगं खदिरं लवङ्गं
जातीफलैलात्वचपत्रिकाद्याः ।
सन्नागवल्लीदलचूर्णयुक्तं
वातामकङ्कोलमृगस्तृणोत्थम् ॥ ५४ ॥

यह बोपदेव का कथन है कि—

सुपारी, कत्था, लौंग, जायफल, छोटी इलायची, तज, जावित्री, बढ़िया पान का पत्ता, चूना, बादाम की गिरी का टुकड़ा, शीतल चीनी, मृगकस्तूरी और तृणकस्तूरी से युक्त पान का बीड़ा श्रेष्ठ होता है ॥ ५४ ॥

अच्युतः—

सम्पत्त्यां नागवल्लीविशददलकुलं पूगखण्डं सुधेषत्
सारोऽल्पः खादिरोत्थो मृगमदपिशुनः स्वर्णवातामकभ्रः ।
कङ्कोलं जातिपत्रं फलमपि च तथैलाफलं-सल्लवङ्गं
ताम्बूले सम्प्रयोज्या इति मदनमितास्तत्प्रवृद्ध्यै पदार्थाः ॥५५॥

अच्युत के अनुसार—यदि सामर्थ्य हो तो उत्तम पान के पत्तों पर थोड़ा चूना, सुपारी के टुकड़े, थोड़ा कत्था, कस्तूरी, स्वर्ण और बादाम के कण, शीतल चीनी, जायफल, जावित्री, छोटी इलायची और लौंग (कामोत्तेजन के लिए) ये कामोत्तेजक पदार्थ पान के बीड़ा में मिलाना चाहिए ॥ ५५ ॥

ताम्बूलगतचूर्णेन मुखदाहे काशिराजः—

मुखं दह्यते चूर्णकेन प्रमादाद्
यदा नागवल्लीदलस्थेन पुंसः ।
सितातैलसौवीरकैस्तन्निवृत्तिः
पृथक् तस्य गण्डूष एवोपदिष्टः ॥ ५६ ॥

काशिराज के अनुसार—यदि पान में भूल से चूना अधिक हो जाने से मुख में जलन होने लगे तो पान के पत्ते पर चीनी, तेल या खट्टी लपसी ( कांजी ) या बेर मुख में रख लेने से जलन शान्त हो जाती है अथवा इनमें से किसी एक के घोल का कुल्ला करना भी लाभकर कहा गया है ॥ ५६ ॥

गले उत्तरे लागली जे सुपारी
तये औसरी धर्मगन्धास्विकारी ।
मुखे ताम्बुला चर्वणी दन्तमाला
सुतैले तथाशीच गण्डूष घाला ॥ ५७ ॥

मुख में ताम्बूल रखकर चबाने से दाँतों की पंक्तियों में और गले में सुपारी ( अर्थात् इसकी सीठी सूक्ष्म कणों के समूह ) लग जाने से गला फँस जाता है। धर्मगन्धा इसकी अच्छी औषधि है। धर्मगन्धा को स्वच्छ तेल में डालकर मुँहभर कुल्ला करने से मुँह, दाँत और गला साफ हो जाता है ॥ ५७ ॥

एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः ।
जातीफलदलैः पूगैलोङ्गल्यूषणनागरैः ।
चूर्णैः खदिरसारैश्च युक्ता कर्पूरवीटिका ॥ ५८ ॥

इलायची, लौंग, कपूर, कस्तूरी, केसर आदि, जावित्री, जायफल सुपारी, जलपीपर, मरिच, सोंठ, पान, चूना, कत्था और कपूर इनको मिलाकर पान का बीड़ा बनाना चाहिए ॥ ५८ ॥

आद्यं तत्पिक्कं त्याज्यं महादोषकरं च यत् ।
द्वितीयं जर्जरं भेदी तृतीयाद्यमृतोपमम् ॥ ५९ ॥

पान की पहली पीक बहुत दोषकारी होने के कारण त्याज्य है। दूसरी पीक जर्जर और भेदी ( दस्तावर ) होती है। तीसरी तथा उसके बाद की पीक अमृत के समान होती है ॥ ५९ ॥

भुक्तन्तरं ताम्बूलग्रहणकाल:—

भुक्त्वान्नं सलिलं पीत्वा गृहीत्वा बहु भेषजम् ।
प्रतीक्ष्य घटिकामेकां ताम्बूलं भक्षयेन्नरः ॥ ६० ॥

भोजन के बाद पान खाने के विषय में कहा गया है कि अन्न खाकर, पानी पीकर और दवा खाकर उसके बाद एक घड़ी रुककर, ताम्बूल खाना चाहिए ॥ ६० ॥

ताम्बूलं नैव सेवेत क्षीरं पीत्वा तु मानवः ।
यावत्तु स्वदते क्षीरं तावदेवेति निर्णयः ॥ ६१ ॥

दूध पीकर तुरन्त पान न खाना चाहिए । जब तक मुँह में दूध का स्वाद अनुभव होता रहे तब तक पान न खाय, ऐसा निर्णय है ॥ ६१ ॥

पथ्यं सुप्तोत्थिते भुक्ते स्नाते वान्ते च सङ्गरे ।
सभायां विदुषां राज्ञां कुर्यात्ताम्बूलचर्वणम् ॥ ६२ ॥

इति वैद्यरत्ने

सोकर उठने पर, भोजन करने पर, स्नान कर लेने पर, वमन ( उल्टी ) होने पर, युद्ध में, विद्वानों और राजाओं की सभा में पान खाना चाहिए ॥ ६२ ॥

यह वैद्यरत्न में कहा गया है ।

अलास्यविद्रध्युपजिह्विकानां
सतालुदन्तार्बुदशोणितानाम् ।
गलास्यगण्डापचितालुशोष-
श्लेष्मामयानां च भृशं प्रशस्तम् ॥ ६३ ॥

अलास, (जिह्वागत मुख रोग), हृदय ग्रन्थिरोग, जिह्वा के मूल में उत्पन्न रोग, तालु, दाँत, आँव या बवासीर, रक्तरोगी, गला, मुख, गण्डमाला, तालुशोष और कफ के रोगियों के लिए पान खाना अधिक लाभकारी होता है ॥ ६३ ॥

ग्रहणगुणाः—

कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धितां च ।
ओजं करोति कफजांश्च हिनस्ति रोगां
स्ताम्बूलमेवमपरांश्च गुणान् करोति ॥ ६४ ॥

ताम्बूल (पान) कामवासना को जगाता है । रूप को निखारता है । सौभाग्य को बढ़ाता है तथा मुख को सुगन्धि देता है । यह ओजदायक है तथा कफ से उत्पन्न रोगों को नष्ट करता है । इसी प्रकार पान और भी अन्य गुण ( लाभ ) करता है ।। ६४ ।।

वर्ज्यानि—

ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥ ६५ ॥

घाववाले, पित्तरोगी, रक्तरोगी, रूक्ष व्यक्ति, जिनकी आँखें आई हुई ( उठी हुई ) हों, जहर पी लिए हो, मूर्छित हो, नशे में धुत्त हो तथा शोष के रोगी के लिए पान खाना अपथ्य ( हानिकारक ) है ।। ६५ ।।

विण्मूर्च्छा चोपवासार्तो मेही मुखगदी क्षयी ।
भूतापस्मारके कष्टे तिमिरी कृच्छ्रहृद्गदी ॥ ६६ ॥

विष, मूर्छा के रोग, उपवास से दुर्बल, प्रमेहरोगी, मुखरोगी, क्षय के रोगी, भूत चढ़े व्यक्ति, मृगीरोगी, नजला या आँख से न दिखाई देनेवाले ( तिमिरी ), मूत्रकृच्छ्र रोगी और हृदय के रोगी के लिए पान हानिकारक है ।। ६६ ।।

ताम्बूलं नैव सेवेत सुविरक्तः क्षुधातुरः ।
प्रमेही मूत्रकृच्छ्री च क्षीरमभ्यवहृत्य च ॥ ६७ ॥

विरेचक ( जुलाब ) लिये हुये, भूख से व्याकुल तथा प्रमेह और मूत्रकृच्छ्र रोग वाले व्यक्ति को पान न खाना चाहिए। दूध पीकर भी तुरन्त पान न खाना चाहिए ॥ ६७ ॥

तत्वक्त्रपाके नयनप्रमाथे शिरोविकारे मदिरात्यये च।
विषे क्षये शोणितपित्तरोगे व्रणे हितं नो तरुणज्वरार्ते ॥६८॥

मुँह पकने पर, आँखें उठने पर, शिर में पीड़ा आदि विकार होने पर, अधिक शराब पी लेने पर, विष खा लेने पर, क्षय होने पर, रक्त और पित्त रोग होने पर, और तेज बुखार होने पर पान न खाना चाहिए॥ ६८ ॥

दन्तदौर्बल्यपाण्डुत्वनेत्ररोगबलक्षयान् ।
वितनोत्यास्य रोगांश्च ताम्बूलमतिसेवितम् ॥ ६९ ॥

पान का अधिक सेवन दाँतों की कमजोरी, पाण्डु रोग (पीलिया), नेत्ररोग, निर्बलता और मुख के रोगों को बढ़ाता है ॥ ६९ ॥

अक्षिरोगे क्षये पाण्डुरोगान्त्रमयवानपि ।
अपस्मारी श्वासकासी हृद्रोगी रक्तपित्तकी ॥ ७० ॥

ग्रहणीवानतीसारे ताम्बूलं परिवर्जयेत् ।
विद्याकामो दिवा रात्रौ ताम्बूलं न तु खादयेत् ॥ ७१ ॥

आँख का रोग होने पर, क्षय रोग, पाण्डु रोग, गान्त्र रोग, मृगी रोग, श्वास और कास रोग, हृदय रोग, रक्त-पित्त रोग, संग्रहणी रोग, अतीसार ( अधिक दस्त ) रोग के रोगियों को पान खाना हानिकारक है। विद्यार्थी को दिन या रात में किसी समय पान न खाना चाहिये ॥ ७०–७१ ॥

ब्रह्मचारी यतिश्चैव विधवा च रजस्वला ।
प्रत्येकं मांसतुल्यं तन्मिलितं सुरया समम् ॥ ७२ ॥

ब्रह्मचारी, साधु सन्यासी, विधवा और रजस्वला के लिए पान खाना शराब और मांस के बराबर है ॥ ७२ ॥

प्रतिप्रसवः—

नेत्ररोगहरं रुच्यं श्लेष्मरोगहरं शुभम् ।

नागरस्वरसं पथ्यं ताम्बूलं घनसारयुक् ॥ ७३ ॥

अपवाद—

कपूर युक्त पान का स्वरस रुचिकर, नेत्र रोग दूर करने वाला, कफ रोग नाशक और पथ्य कहा गया है ॥ ७३ ॥

पत्रं फलं खादिरं च चूर्णं चैव चतुर्थकम् ।

पञ्चमं तु मुखं वध्वाः रागः षष्ठ उदाहृतः ॥ ७४ ॥

पान, जातीफल, कत्था और चौथा चूना, पाँचवाँ वधू का मुख और छठवाँ राग ( काकोदुम्बरिका चूर्ण ) कहा गया है ॥ ७४ ॥

षडङ्गमितितत् प्रोक्तं षडैश्वर्यकारकम् ।

षडैश्वर्याद् दुःखवश्यादुपवसेत्तत्र लक्ष्मी निरन्तरम् ॥७५॥

ये षडङ्ग कहे गये हैं। ये छः ऐश्वर्यकारक हैं। षड़ैश्वर्य होने से लक्ष्मी वहाँ निरन्तर वास करती हैं ॥ ७५ ॥

पानीयं स्यान्न सेव्यं विषमिव गरदं मैथुनान्ते मुहूर्त्तं

प्रस्रावान्ते मुहूर्त्तं पलदशकमितं पायसे भोजने च ।

अध्वान्ते चौषधान्ते त्रिघटिपरिमितं वर्जयेदम्बुपानं

धारोष्णान्तेऽर्धयामं पलदशकमितं ताम्बुलं मूलकान्ते ॥७६॥

मैथुन के अन्त में पानी न पीना चाहिये। वह विष के समान हानि करता है। पेशाब करने के एक मुहूर्त बाद तथा खीर और भोजन के दस पल बाद, और रास्ता चल लेने के बाद तथा औषधि खाने के बाद तीन घड़ी तक पानी पीना वर्जित है। धारोष्ण दूध

पीने के आधे पहर बाद, और मूली खाने के दस पल बाद पान खाना चाहिये ॥ ७६ ॥

मुहूर्त्त = २ घड़ी ।

पर्णानि पूगखण्डानि चूर्णं च खदिरं शुभम् ।
कर्पूरैलालवङ्गादि . जातीफलतजस्त्वचः ॥ ७७ ॥
चतुर्भिर्मिलितैर्द्रव्यैस्ताम्बूलं मम वल्लभे ।
मृगनाभि मरीचानि मुरमांसनखांस्तथा ॥ ७८ ॥

पान के पत्ते, सुपारी के टुकड़े, चूना, कत्था, कपूर, इलायची, लौंग, आदि, जायफल, तज इनके अतिरिक्त हे प्रिये ! कस्तूरी, मरिच, मुरमांस और नख ये चार द्रव्यों से युक्त पान खाना चाहिये ॥ ७७–७८ ॥

नोट—इस श्लोक में मुरमांस और नख ये दो शब्द आये हैं । पान में इनके खाने का रिवाज नहीं है । मुरमांस क्या है, इस सम्बन्ध में अनुमान है कि यह मुरगावी नाम से प्रसिद्ध जल पक्षी का मांस हो सकता है। इसको शिकारी लोग खाते हैं । कैयदेव-निघण्टु में मुरा को मुरमांसी बताया गया है । यह सुगंधित होती है । संस्कृत में इसके पर्याय गन्धवती, हृद्या, भूरिगन्धा, सुरभि और गंधमादनी आदि शब्द होते हैं । यह तिक्त, कषाय, शीतवीर्य एवं लघु होती है । यह पित्त, वात, ज्वर, रक्तविकार, भूत, राक्षस, कुष्ठ एवं कास को दूर करती है ।

नख दो प्रकार के होते हैं—साधारण नख और व्याघ्र नख । दोनों प्रकार के नख विषनाशक, नखरोग, स्वेद, दुर्गन्ध, अलक्ष्मी, ग्रहबाधा और ज्वर को नष्ट करते हैं ।

मुरमांस को मांस मानने पर यह कहना पड़ेगा कि देश के किसी एक भाग में तांत्रिक लोग पान में इनका प्रयोग करते रहे होंगे ।

अथ ताम्वूलपत्रनानाजातिगुणा देशविशेषेण—

अथ भवति नागवल्ली ताम्बूली फणिलता च सप्तशिरा ।
पर्णलता फणिवल्ली भुजगलता भक्ष्यवल्ली च ॥ ७९ ॥

सा च श्रीवाटाम्लवाटादिनानाग्रामस्तोमाख्यानभेदाद्विभिन्ना ।
एकाप्येषा देशमृत्स्नाविशेषान्नानाकार्यं याति गुणे कार्ये च ॥

अब पान के पत्तों की देशविशेष के अनुसार नाना जाति और गुण को कहते हैं—

नागवल्ली, ताम्बूली, फणिलता, सप्तशिरा, पर्णलता, फणिवल्ली भुजगलता, भक्ष्यवल्ली ये नागवल्ली ( पान की लता ) के पर्याय हैं। वह नागवल्ली श्रीवाट, अम्लवाट आदि अनेक गाँवों के नाम पर भेद से विभिन्न प्रकार की होती है। यह अकेली लता देश-देश की मिट्टी की विशेषता के कारण आकार और गुण में परस्पर भिन्न होकर अनेक कार्य को करती है ॥ ७९ ॥

साधारणनामगुणाः—

नागवल्ली कटुस्तीक्ष्णा तिक्ता पीनसवातजित् ।
कफकासहरा रुच्या दाहकृद्दीपनी जरा ॥ ८० ॥

इसके साधारणनाम और गुण को कहते हैं—

नागवल्ली कटु, तीक्ष्ण और तिक्त होती है। यह पीनस ( नाक का रोग ) और वात रोग को जीत लेती है। कफ और खाँसी को हर लेती है। यह दाहक और जठराग्नि को दीप्त करती है ॥ ८० ॥

श्रीवाटपर्णम्—

श्रीवाटीमधुरा तीक्ष्णा वातपित्तकफावहा ।
रसाढ्या च सरा रुच्या विपाके शिशिरा स्मृता ॥ ८१ ॥



श्रीवाट स्थान की नागवल्ली मधुर, तीक्ष्ण, वात, कफ और

पित्त को दूर करती है। यह रसयुक्त, सारक, रुचिकर और विपाक होने पर शीतल होती है ॥ ८१ ॥

आम्वाडपर्णम्—

स्यादम्लवाटी कटुकाम्लतिक्ता
रूक्षा तथोष्णा मुखपाककर्त्री ।
विदाहपित्तास्रविकोपिनी च
विष्टम्भदा वातनिबर्हिणी च ॥ ८२ ॥

अम्लवाट स्थान की नागवल्ली का पत्ता कटु, अम्ल, तिक्त, रूक्ष, उष्ण और मुख को पका देने वाला, दाह, पित्त और रक्त को कुपित करने वाला, कब्जकारक और वात रोग को नष्ट करने वाला होता है ॥ ८२ ॥

सप्तसीपर्णम्—

सप्तसी मधुरा तीक्ष्णा कटूरूक्षा च पाचनी ।
कुष्ठोदरहराध्मानं नाशयेद्रुचिदीपनी ॥ ८३ ॥

सप्तसी स्थान की नागवल्ली का पत्ता मधुर, तीक्ष्ण, कटु, रूक्ष, और पाचक होता है। यह कुष्ठ, उदर रोग और आध्मान (पेट फूलने या उदर स्फीति) को नष्ट करता है। भोजन में रुचि को बढ़ाता और जठराग्नि को दीप्त करता है ॥ ८३ ॥

गुहागरपर्णम्—

गुहागरे सप्तशिरा प्रसिद्धा
साजीर्णपर्णाऽतिरसाऽतिरुच्या ।
सुगन्धितीक्ष्णा मधुरातिहृद्या
सन्दीपनी पुंस्त्वकरातिरुच्या ॥ ८४ ॥

गुहागरपर्णं—

गुहागर स्थान की नागवल्ली प्रसिद्ध है। उसके पुराने पके पत्ते अधिक रसयुक्त, अतिरुचिकर, तीक्ष्ण सुगन्धवाला, मधुर और हृदयरोग के लिए लाभदायक होते हैं। वह जठराग्नि को दीप्त करने वाला, पुरुषत्व को बढ़ाने वाला और अति रुचि के योग्य होता है ॥ ८४ ॥

मालवदेश पर्णम्—

नाम्ना याम्लरसा सुतीक्ष्णमधुरा रुच्या हिमा दाहनुत्
पित्तोद्रेकहरा सुदीपनकरी बल्या मुखामोदिनी ।
श्रीसौभाग्यविवर्धिनी मदकरी राज्ञां सदा वल्लभा
गुल्माध्मानविबन्धजिच्च कथिता सा मालवे तु स्मृता ॥८५॥

मालव प्रदेश की नागवल्ली अम्लरस वाली, तीक्ष्ण, मधुर, रुचिकरी, हिमा, दाह दूर करने वाली, पित्त को बढ़ाने वाली, दीपनकारिणी, बलवर्धक, मुख को सुगन्ध देने वाली, सौभाग्य-वर्धिनी, मदकारिणी, राजाओं को सदा प्रिय, प्लीहा उदर-स्फीति और कब्ज को हरनेवाली कही गई है ॥ ८५ ॥

आन्ध्रदेशे पटुकुलीकुली पर्णम्—

अन्ध्रे पुष्कलिका नाम कषायोष्णा कटुस्तथा ।
मलापकर्षा कण्ठस्य पित्तकृद् वातनाशिनी ॥ ८६ ॥

आन्ध्र प्रदेश में पुष्कलिका नाम की प्रसिद्ध नागवल्ली कषाय, उष्ण तथा कटु होती है। यह गले के मल को ढीला करने वाली, पित्तकारक और वातनाशक होती है ॥ ८६ ॥

होसणीयपर्णम्—

होसणी कटुका तीक्ष्णा हृद्या दीर्घदला च सा ।
कफ वातहरा रुच्या कटुर्दीपनपाचनी ॥ ८७ ॥

होसणी स्थान की नागवल्ली का पत्ता कटु रुचिकर, तीक्ष्ण और

बड़े आकार का होता है। वह कफ और वात को दूर करता है। कटु, दीपन और पाचक होता है ॥ ८७ ॥

सद्यस्त्रोटितभक्षितं मुखरुजाजाड्यावहं दोषकृद्-
वातारोचकरक्तदाहमलकृद् विष्टम्भवान्तिप्रदम्।
यद् भूयो जलपानपोषितरसं तच्चेच्चिरात्त्रोटितं
ताम्बूलीदलमुत्तमं च रुचिरं बल्यं त्रिदोषार्त्तिनुत् ॥८८॥

होसणीय पान के पत्ते को ताजा तोड़ कर खाने से वह मुखरोग और जड़ता को प्राप्त कराता है। वात, अरुचि, रक्तदाहकारी, मलकारी, कब्ज और वमनकारक होता है। यदि उसको जल द्वारा पकाकर पुराना कर लिया जाय तो वह उत्तम हो जाता है। वह सुन्दर, बलवर्धक तथा त्रिदोष की पीड़ा को दूर करता है ॥ ८८ ॥

कृष्णशुभ्रपर्णगुणाः—

कृष्णं पर्णं तिक्तमुष्णं कषायं
धत्ते दाहं वक्त्रजाड्यं मलं च।
शुभ्रं पर्णं श्लेष्मवातामयघ्नं
पथ्यं रुच्यं दीपनं पाचनं च ॥ ८९ ॥

काले और सफेद पान के पत्तों के गुण के विषय में कहते हैं कि पान का काला पत्ता तिक्त, उष्ण, कषाय और दाहक होता है। वह मुख को जड़ बनाता और मल को रोकता है। पान का सफेद पत्ता कफ और वायुनाशक, पथ्य, रुच्य, दीपन और पाचक होता है ॥८९॥

शिरापर्णं तु शैथिल्यं कुर्यात्तस्यास्यहृद्भवम्।
शीर्णं त्वग्दोषदं तस्य भक्षिते तु सितासिते ॥ ९० ॥

काले और सफेद दोनों पानों का शिरा, मुख और हृदय की शिथिलता उत्पन्न करता है। सूख कर गिरे या टुकड़े-टुकड़े हो गये पत्ते को खाने से त्वचा में दोषकारक होते हैं ॥ ९० ॥

ताम्बूलवल्लिकापत्रं कटु पाकरसोष्णम् ।
तीक्ष्णोष्णं तुवरं क्षारं दीपनं विशदं सरम् ॥ ९१ ॥
रोचनं स्रंसनं स्वर्यं रक्तपित्तविवर्धनम् ।
कफवातास्रदौर्गन्ध्यकण्डूक्लेदमलापहम् ॥ ९२ ॥

पान का पत्ता कटु, पाक रस, उष्ण वीर्य, तीक्ष्ण एवं क्षारीय, अग्निदीपक, विशद, सारक, रोचन, स्रंसन, स्वर को उत्तमता देनें वाला, रक्त पित्त को बढ़ाने वाला, तथा कास, वात, मुख की दुर्गन्ध, खुजली, क्लेद और मल को दूर करता है ॥ ९१–९२ ॥

रुचिरवधूगलरत्नमालायाम्—

शुकपतगपुरन्ध्रीगण्डपाण्डूनि चञ्चत्
कनककरकनालोद्धारयत्नोचितानि ।
त इह खलु लभन्ते नागवल्लीदलानि
त्रिपुररिपुपदाग्रे ये तु कम्रा विनम्राः ॥ ९३ ॥

रुचिरबधूगलरत्नमाला में कहा गया है कि शुकपक्षी और कामिनी के गण्डस्थल के समान पाण्डुरंग, चमकते सोने की नाल के समान शिरावाले नागवल्ली के दल ( पत्ते ) यहाँ वे पाते हैं जो शिव जी के चरण के आगे कम्र और विनम्र होते हैं ॥ ९३ ॥

जीर्णपत्रगुणाः वैद्यरत्ने—

पर्णं पुराणमकटु क्षुल्लकं तनुपाण्डुरम् ।
विशेषाद् गुणवद् वेद्यमन्यद्धीनगुणम् स्मृतम् ॥ ९४ ॥

वैद्यरत्न ग्रन्थ में पुराने पान का गुण कहा गया है कि पान का पुराना पत्ता मधुर, क्षुद्र शंख के समान पाण्डु रंग का होता है। वह विशेष रूप से बहुत गुण से युक्त होता है। उससे अन्य पान के पत्ते गुण में कम होते हैं। यह जानना चाहिये ॥ ९४ ॥

अथ पूगम्—

पूगवृक्षस्य निर्यासो हिमः सम्मोहनो गुरुः ।
विपाके सोष्णकः क्षारः साम्लो वातघ्नपित्तलः ॥ ९५ ॥

पूग सुपारी के पेड़ को कहते हैं। उसका फल पूग फल कहलाता है। यह हिम, सम्मोहन और गुरु होता है। पक जाने पर उष्ण, क्षार, अम्लयुक्त, वातनाशक औरपित्तकारक होता है ॥ ९५ ॥

खेचरी भाषा—

खेचरी मधुरा रुच्या कषायाल्पकटुस्तथा ।
पथ्या च कफवातघ्नी सारिका मुखदोषनुत् ॥ ९६ ॥

खेचरी नाम से प्रसिद्ध सुपारी मधुर, रुचिकर, कषाय और थोड़ी कटु होती है। यह पथ्य होती है। कफ और वात की पाचक, मल की सारक और मुख के दोषों को दूर करती है ॥ ९६ ॥

नैल्वतं—

नैल्वतं मधुरं रुच्यं कण्ठशुद्धिकरं लघु ।
त्रिदोषशमनं दीप्यं रसालं पाचनं सरम् ॥ ९७ ॥

नैल्वत सुपारी मधुर, रुचियोग्य, कंठ को शुद्ध करने वाली, लघु, त्रिदोष को नाश करने वाली, दीपन योग्य, रसाल, पाचक और सारक होती है ॥ ९७ ॥

गुहारचिक्कणा—

गौल्यं गुहारं श्लक्ष्णं च विपाके कटु पाचनम् ।
विष्टम्भजठराध्मानहरणं द्रावणं लघु ॥ ९८ ॥

चिकनी सुपारी मधुर, पचने पर कटु, पाचक, कब्ज और उदर स्फीति को हरनें वाली, द्रवकारक और लघु होती है ॥ ९८ ॥

गोण्टु लाक—

घोण्टा कटुकषायोष्णा कठिना रुचिकारिणी ।
मलविष्टम्भशमनी पित्तकृद्दीपनी च सा ॥ ९९ ॥

घोण्टा सुपारी कटु, कषाय, उष्ण, कठोर, रुचिकारक, मल के कब्ज को शान्त करने वाली, पित्त कारक और जठराग्नि को दीप्त करने वाली होती है ॥ ९९ ॥

चउली सुपारी--

पूगीफलं चौउलि संज्ञकं यत्
तत् कोङ्कणेषु प्रथितं सुगन्धि ।
श्लेषापहं दीपनपाचनं च
बलप्रदं पुष्टिकरं रसाढ्यम् ॥ १०० ॥

चउली नाम की सुपारी कोङ्कण प्रदेश में प्रसिद्ध है । वह सुगन्धित, कफनाशक, पाचन, दीपन, सरस, बलवर्धक और पुष्टिकर होती है ॥ १०० ॥

होसपाटणपूगं—

यद्धोषणे वल्लगुणाभिधानक-
ग्रामोद्भवं पूगफलं त्रिदोषनुत् ।
आमापहं रोचनरुच्यपाचनं
विष्टम्भतुन्दामयहारि दीपनम् ॥ १०१ ॥

होसंण में वल्लगुण नामक गाँव में पैदा होने वाली सुपारी त्रिदोष नाशक है । आम ( आँव ) को दूर करने वाली, रुचिकर और पाचक होती है । कब्ज तथा उदर के रोगों को हरने वाली तथा कामोत्तेजक होती है ॥ १०१ ॥

चन्द्रापुरोद्भवं पूगं कफघ्नं मलनाशनं ।
कटु स्वादु कषायं च रुच्यं दीपनपाचनम् ॥
(पूगं सम्मोहकृत् सर्वं कषायं स्वादु रेचनम् ।)
त्रिदोषशमनं रुच्यं वक्त्रक्लेदमलापहम् ॥ १०२ ॥

चन्द्रापुर में पैदा होने वाली सुपारी कफ नाशक और मलनाशक होती है। कटु, स्वादु, कषाय, रुचने योग्य, दीपन और पाचक होती है। सभी सुपारी सम्मोहनकारी, कषाय, स्वादु और रेचक होती हैं। यह त्रिदोषशामक, रुचिकर, और मुख की लार ( लाला ) और दुर्गन्ध को दूर करती हैं ॥ १०२ ॥

आमं पूगं कषायं मुखमलशमनं कण्ठशुद्धिं विधत्ते
रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सरं च ।
शुष्कं कण्ठामयघ्नं रुचिकरमुदितं पाचनं रेचनं स्यात्
पर्णैर्नो युज्यते चेज्झटिति वितनुते पाण्डु वातं च शोफम् ॥१०३॥

कच्ची सुपारी कषाय होती है। वह मुख के मल की दुर्गन्धि को दूर करती है। कण्ठ को शुद्ध करती है। रक्त, आम, कफ, पित्त को शमन करती है और उदर स्फीति को हरती है। यह सारक होती है। सूखी सुपारी कण्ठ रोगों को नष्ट करती है। रुचिकर, पाचक और रेचक होती है। यदि यह पान में डाल कर नहीं खाई जाती है तो शीघ्र ही पाण्डु ( पीलिया ), वात और शोथ ( सूजन ) को पैदा करती है ॥ १०३ ॥

रोचनं मोहनं हृद्यं कफपित्तनिबर्हणम् ।
दीपनं वक्त्रवैरस्यमलदौर्गन्ध्यनाशनम् ॥ १०४ ॥

सुपारी रुचिकर, मोहन, हृदय के लिये लाभ कर, कफ पित्त नाशक है, यह उदर की अग्नि को दीप्त करती है। मुख के फीके पन और मल की दुर्गन्ध को नाश करती है ॥ १०४ ॥

